प्रादायि च म्लेच्छेभ्यः साहाय्यम् । दूरे तावत्कर्मणोऽस्य कृते नः पारितोषिकम् । वयमेव पुनरत्रापराधित्वेन निर्णीताः । प्रकाश्य चास्माकं शारीराभिज्ञानानि प्रतिश्रुतं चाघोषितं चास्मदुपलम्भवार्तावदेकेभ्यः पारितोषिकद्रव्यम् । मार्गयन्ति खल्विदानीमप्यस्मान्निगूढचारिणश्चारा म्लेच्छानाम् । यत्तुकालमेतावन्तमाश्रित्य काननमिदं जीवामः सोऽयमनुग्रह एव केवलं भगवतो धातुः । प्रेयसि का कथा षोडशानां सप्तदशानां वा वर्षाणाम् । एते किल व्यतीतेष्वपि पञ्चाशदभ्यधिकेषु वर्षेषु प्रत्यक्षीकृतानस्मान्गृह्णीयुः । वियोजयेयुश्चोद्बध्य प्राणैर्निर्वासयेयुर्वाप्यपुनरागमनाय राष्ट्रात् । अत एव च युक्ततरोऽयमिदानीं विजन एव वासोऽस्माकम् ।

योगिनी—अलमाशङ्कया ! को हि नामेदानीं वेषेणामुना समाच्छन्नमपि श्रीमन्तमभिजानीयात् । सर्वथा हि परिवृत इदानीं भवदीय आकारः तथा किलेदं वचनमुदीरितं प्रणयपरिप्लुतान्तःकरणया श्रीमत्या योगिन्या यथा श्रवणकुहरप्रविष्ट एवैतस्मिन् प्राद्रवद्योगिनो हृदयम् । प्रत्याह चायं सुदीर्घमुष्णञ्च निश्वस्य "प्रेयसि" "कुत इदानीं नगरे नः सुखस्य प्रत्याशे"ति ।

योगिनी—सा तु चिरायैव परित्यक्ताऽस्माभिः ।

योगीन्द्र—तत्क इवेदानीं चिन्ताया अवसरः (स्मरणमभिनीय) कथमिदानीं वत्सा ।

योगिनी—बाढं कुशलिनी ।

योगीन्द्र—उत्कण्ठते मे हृदयं सकृदपि तावदेनां साक्षात्कर्तुम् ।

योगिनी—तत्को विलम्बः ? सम्प्रति हि सह सुधाकरेणोपवनसन्निहितया तया भवितव्यम् ।

योगीन्द्र—प्रेयसि, यदि नाजीवयिष्यत्कुमारं श्रीमतो रमेशचन्द्रमहोदयस्य श्रीमती तदा कुतः संभावनापि नाम परिणयस्य वत्सायाः । न खलु प्राभविष्यदात्मानं वा मामपि वा प्रत्यभिज्ञापयितुं भवती । अविज्ञातकुलशीलायाश्च योगिन्याः कन्यकां को वा परिणेतुमीहेत ।

इत्येवमभिधाय च योगीन्द्रः सुदीर्घं निशश्वास । योगिन्यपि दीर्घं निश्वस्य निजगाद—"सर्वथा प्रभवति विश्वभावनो भगवान्" आस्तामेतत्कच्चिदागमिष्यति श्रीमान् ।

योगीन्द्र—प्रेयसि न खल्वद्य प्रभवाम्यागन्तुम् । न जाने कुतो वा व्याकुलीक्रियते मे हृदयं सपदि साध्वसातिशयेनेति ।

योगिनी—तत्कदा पुनरनुग्रहीष्यत्यार्यः ?

योगीन्द्र—जानात्येव भवती यथाऽहमस्मिन्नपि प्रदेश उपतिष्ठामीति।

योगिनी—जानाम्येतत्। तथापि वाञ्छामि नियतं कमपि समयमवबोद्धुमागमनस्य।

योगीन्द्र—अतः परंमासेनैकेनास्मिन्नेव वासरे समागमिष्यामि।

योगिनी—तत्किमिति सम्प्रत्येव नानुगृह्यतेऽसौ परिचारिका कुटीरागमनेन। तत्रैव हि वत्सां लावण्यमयीमानेष्यामि।

योगीन्द्र—सति सौकर्ये विधास्याम्येतत्। अन्यथा पुनः श्रीमत्येव मे कुटीरमुपयातु।

योगिनी—(सविनयम्) नाथ! एतानि तावद्भवन्तु पञ्चाशद्रूप्यकाणि। अनुगृह्यतामियं दासी स्वीकरणेनैतेषाम् (इति रूप्यकाण्यर्पयति)।

योगीन्द्र—(सोद्वेगं रूप्यकाणि विलोक्य) आर्ये, नूनं श्रीरेव भवती नः सदनस्य (अश्रूण्युन्मुच्याकाशे लक्ष्यं बद्ध्वा) भगवन् कृतान्त किमित्युपेक्ष्यतेऽयं जनः। अनुगृहीतो हि त्वया स्मरणशेषतामापन्नः क्लेशानां पुनरेतेषां भाजनं न भविष्यामि। नाथ, किमेतत्। परिचारिका नन्वियं भवदीया। विहाय चैनां का वाऽन्या जीवितनिर्विशेषं परिचरेदार्यम्। तदलमस्थाने शोकेन। तथा चैक एवावयोरात्मा तथा भवदीयमेव नन्वेतद्द्रविणम्। तदलमनौचित्यसम्भावनया।

समाकर्ण्य वंचनमेतद्योगिन्या वज्रोपहत इव तूष्णीं बभूव योगीन्द्रः। उत्थाय च ससम्भ्रमं निर्वर्ण्य पुनर्योगिनीं कथमपि गृहीतद्रविणः प्रायासीत्। यावच्चासौ नान्तर्हितो वनराज्या तावदेवं निस्तरलतारकेण चक्षुषा वीक्षमाणा योगिनी तिरोहिते तस्मिन्नायततरं निश्वस्य कुटीरोन्मुखी प्रातिष्ठत।

इति लावण्यमय्यां षष्ठः परिच्छेदः।

## सप्तमः परिच्छेदः

# लावण्यमयी सुधाकरश्च

यदेतदुपवर्णितपूर्वमस्माभिरुद्यानं तत्र किल प्राथमिकात्समागमतः प्रभृति प्रत्यहं नियतसमयमेव समागत्य लावण्यमयीसुधाकरौ

सप्रणयं परस्परं साक्षात्कुरुतः। वितनुतश्च शैशवोचितास्तास्ताः क्रीडाः। यद्यपि द्वादशवर्षदेशीया सरलतमस्वभावा श्रीमती लावण्यमयी नासीत्सर्वथैवानभ्यन्तरे यौवनरसस्य। तथापि किमपि किमप्यनभिज्ञत्वमेवाऽभवद्विषयेऽस्मिन्नेतस्याः। संस्पृष्टयौवनोऽपि षोडशवर्षदेशीयः श्रीमान्सुधाकरो नासीत्परिचितो विषयवासनापरपर्यायाः पशुवृत्तेः।

तत एव चासीदन्तरङ्गमनयोरव्याजेन चालौकिकेन च प्रेम्णा समुल्लसितम्। विललास चात्र मधुरिमानुगामि सारल्यं, सौन्दर्यानुवृत्ति सौजन्यं, प्रणयनिकारानुसारिणी प्रीतिर्व्रीडाऽविनाभूता क्रीडा, क्रीडायाश्च सहचारिणी व्रीडा।

उभयोरपि सुविशुद्धमिव सुरस्रोतस्विनीसलिलमविज्ञातदुरितसम्पर्कमविस्पृष्टजघन्याचरितमासीत् हृदयम्। न खल्वासीद्विदितमेतयोः कुलं पारस्परिकं तथाप्यासीदेवानयोर्गरीयसी प्रीतिः। निसर्ग एव ह्यसौ प्रीतेर्यदियमविचार्यैव कुलशीलादिकमान्तरेणैव केनापि हेतुना प्रेर्यमाणा प्रादुर्भवति। प्रादुर्भूता च विनयत्यात्मनो गोचरे पतितम्। न चाप्यसौ केनापि प्रतिबन्धकेन विनिरोद्धुं शक्यते। यत्तु क्वापि समवेक्षते प्रतिरोध एतस्याः स खलु विद्योतयत्येतस्या नैसर्गिकेतरताम्। दुर्निवारा हि नैसर्गिकी प्रीतिः।

इदानीं पुनर्नातिप्रगल्भयोरपि प्रणयपरिप्लुतान्तरयोरनयोः कुमारकुमारिकयोः संलापसुधारसं प्रियपाठकमहोदयेभ्य उपहर्तुमिच्छामः। आस्वाद्यतां तावदयं विज्ञातास्वादैर्यथेष्टममीभिः।

कस्मिंश्चित्खलु दिवसे समुपस्थिता प्रमदवनं लावण्यमयी कस्यापि निरन्तरनिचितकुसुमसमुल्लसितस्य बकुलतरोर्मूले प्रच्छायशीतले शिलातले समुपविश्य निजकरकमलावचितानां नानाविधप्रसूनानां मालाश्च हारांश्च स्तबकांश्चैकतानेन मनसा ग्रन्थन्ती शनैःशनैश्चान्तराऽन्तरा श्रवणमधुराणि गीतान्यावर्तयन्त्यासीत्।

अस्मिन्नेवावसरे समवचितकुसुमः सुधाकरोऽप्यविदितचरणविन्यासं शनैः शनैः पृष्ठतोऽस्या भूत्वाऽवस्थितः। कुसुमग्रथनकर्मणि नितान्तमेव प्रसक्तमानसया तु नायमभिलक्षितः श्रीमत्या लावण्यमय्या। अतिक्रान्तायां पुनः कियत्यां कालकलायां शनैः शनैः सन्निधाय पिदधेऽस्या नयनसरसिजद्वितयमवितर्कितमेवात्मनः पाणिपल्लवद्वितयेन श्रीमान् सुधाकरः। लावण्यमयी तु पिहितमात्र एव नयने प्राह। सुधाकर, सुधाकरः एषोऽसि विज्ञातः। मुञ्चेदानीं मे नयनद्वितयमिति। तदा-

कर्ण्ये विहसन्नुन्मुच्य तस्या नेत्रद्वन्द्वं पुरस्ताद्भूत्वा प्रोवाच सुधाकरः—"पश्य तावत्कियन्ति वा समानीतानि मया त्वदर्थमेतानि कुसुमानी"ति। अभिधायचेत्थं नानाविधान्यस्यै कुसुमान्यर्पयामास । अवेक्ष्य चैनं प्रसूनराशिं प्रसन्नान्तरङ्गा श्रीमती लावण्यमयी करे गृहीत्वा सुधाकरं प्राह। किमित्येवमवस्थानेनायास्यत आत्मा ! इतस्तावदास्यतां मत्सविध इति।

सुधाकर—कुतोऽत्रैतावानवकाशः।

लावण्य—भूयान्ननु विद्यते।

इत्यभिधाय च सकरग्रहमुपावेशयदात्मनः समीपे सुधाकरं लावण्यमयी।

लावण्य—पश्यतु महाभागो भवदर्थमेव मया ग्रथितान्कुसुमहारानेतान् ।

सुधाकर—अहो रामणीयकमेतेषाम् । अहमपीदानीं श्रीमत्याः शिरोविभूषणोचितं कुसुमजालकं ग्रन्थामि ।

लावण्य—अलमलं मदर्थमात्मानमायास्य ।

सुधाकर—साधु भद्रे, कथं वा न गुम्फयिष्यामि। इत्येवमभिधाय च पुनरपि समासक्तौ कुसुमग्रथनकर्मण्येतौ। तदनु पुनः सुधाकरः किञ्चिदिव समुदञ्चितस्मितः प्रावोचत्—"भद्रे लावण्यमयि कच्चित्परिणेष्यति मां भवती।"

लावण्य—कोऽत्र सन्देहः। न जाने कोऽयं परिणयो नामेति। नाममात्रश्रवणेऽपि पुनरस्य प्रसीदतितमां मे चेतः। अवश्यं परिणेष्यामि त्वामेव।

सुधाकर—अथ यदि पिता तेऽन्यस्मै प्रदानं संकल्पयेत्?

लावण्य—अलमन्यथा सम्भाव्य। अहं हि परमं प्रेमास्पदं तातस्य। स हि यद्यन्मया प्रार्थ्यते तत्तदवश्यं प्रयच्छति। यथा च मयाऽभिधीयते तथा विदधाति। तत्कथं नाम प्रार्थितोऽपि मया नानुमन्येत श्रीमता साकं ममोद्वाहम्?

सुधाकर—अपि नाम दद्यादेवं प्रार्थयितुमवसरं ते व्रीडा।

लावण्य—कैव नामात्र व्रीडा। अपि नाम भवत्युद्वाहेप्येषा आस्तां तावदिदम्। किन्तु भद्रमुख, किमिति वा नोपाव्रजसि नः सदनम्?

सुधाकर—आगमिष्यामि।

लावण्य—कदा?

सुधाकर—यदा ते पाणिं ग्रहीष्यामि।

लावण्य—तदैव तावत्पितरं विज्ञापयिष्यामि विधीयतां ममोद्वाहोऽविलम्बितमेव श्रीमता सुधाकरेणेति येन सत्वरमेवागमिष्यति सदनमस्मदीयं श्रीमान्।

सुधाकर—भद्रे! यदि दैवदुर्विपाकात्पिताऽन्यस्मै प्रतिपादयेत्तदा किं वा प्रतिपत्स्यते भवती?

लावण्य—मामैवम्। न खल्वेवं भविष्यति।

सुधाकर—तथापि यदि घटेत?

लावण्य—तदा किल प्राणानेवात्मनः परित्यक्ष्यामि।

सुधाकर—विहाय प्राणपरित्यागसाहसं कच्चिन्निगूढमेवानुसरिष्यसि माम्। वरं ह्येतत्प्राणपरित्यागात्।

निशम्यैतत्क्षणमिव तूष्णीभूता लावण्यमयी समवलम्ब्येव नैराश्यं प्रत्याह—"कथं वा पितरं परित्यक्तुं प्रभवेयमि"ति?

सुधाकर—न पुनरत्र गत्यन्तरं पश्यामि।

लावण्य—न खलु कथञ्चिदपि प्रतिकूलमाचरिष्यति मे तातः।

इत्येवं संलप्य चोभाभ्यां मुक्ताः परस्परयोः कण्ठे कुसुममालिकाः, वितीर्णौ च परस्पराभ्यां हृदयहारिणौ गुच्छौ।

यत्पुनरुल्ललासेदानीं लावण्यमय्या लावण्यं न खल्वेतदुपवर्णयितुं प्रभविष्यति लेखन्यस्माकम्। अन्ततः पुनर्गाढं परिष्वज्य निष्क्रमितुमारभेतामुद्यानादेतौ। प्रत्यासन्ना हि तदानीं तमिस्रेति।

लावण्य—श्वः पुनरनतिपातितकालमेवोपागच्छतु।

सुधाकर—आगमिष्यामि अनतिपात्यैव समयमागमिष्यामि।

इत्येवं विहितसंलापकौतुकौ स्वं स्वमालयं प्रतिष्ठेतां लावण्यमयीसुधाकरौ।

इति लावण्यमय्यां सप्तमः परिच्छेदः

---

## अष्टमः परिच्छेदः

# समागता सरला

अथ कस्मिंश्चिद्दिवसे समनुभवन्निद्रासुखं श्रीमान् रमेशचन्द्रमहोदयः स्वप्नं कमप्यद्राक्षीत्। आसीच्चात्रास्य नयनगोचरः शनैः शनैः पल्लव-

कोमलाभ्यां पाणिभ्यां चरणसरोरुहद्वितयमवमृद्नन्ती निरर्गलञ्च निष्पतताऽनुबद्धधारेण बाष्पाम्बुना ग्लपयन्ती कपोलतलं मुहुर्मुहुश्च सगद्गदाक्षरं क्षमामभ्यर्थयमाना श्रीमती सरला।

श्रीमतो रमेशमहोदयस्यापि बहोरेव कालाज्जीवितवल्लभां समवेक्षमाणस्य समुच्छलतेवानन्दपूरेण सातिशयमेव परिप्लावितं हृदयम्। आसीच्च बाष्पजडा दृष्टिः। एवं स्वप्नमनुभवँश्चायं सुदीर्घतरं निशश्वास। उन्मुक्तनिश्वास एव च प्राबुध्यत। प्रबुद्धमात्रश्चावगच्छत्। यदेतत्कालमेतावन्तमनुभूतं तदेतदशेषमपि स्वप्नगतमेवेति। किन्तु तदात्व एव कोष्णकोष्णाश्रुबिन्दुसम्पर्कमात्मनश्चरणयोः सन्दिहानः समभिलष्यँश्च भूतार्थमवगन्तुं चरणमात्मनः करतलेन परपर्श।

अज्ञासीच्च नूनमश्रूण्येवैतानीति। अस्मिन्नेव च समये गर्भागारकोणाद्विनिर्गतः प्रस्फुरन्निव रुदितध्वनिरविस्पष्टतमोऽस्य श्रवणसरणिमारुक्षत्। तं पुनराकर्णयतो गृहीतमिव युगपदेव भीत्या च विस्मयेन कुतूहलेन चान्तरङ्गमेतस्य। अप्राक्षीच्चासौ सावेगं कस्तावदत्रेति। न पुनरधिगतमत्र प्रतिवचनमेतेन। केवलं तु यथापूर्वं स्खलिताः कियन्तश्चित् कवोष्णकवोष्णा अश्रुबिन्दवश्चरणयोरेतस्य।

ततस्तु प्रतिपत्तिमूढ इव किं जागर्मि किं वा स्वप्न एवायमिति नावगन्तुं प्रबभूव। सञ्जातसाध्वस इव च पुनरप्यप्राक्षीत्कः कस्तावदिति। न पुनरत्रापि प्राप्तं प्रतिवच एतेन। येन केनाप्यत्र निःशब्दमेव रुदता भवितव्यमिति। निशम्य चेदं रुदितं झटिति समुत्थितः श्रीमान् रमेशमहोदयो गर्भागारद्वारमनुलक्ष्य गन्तुमारेभे। आसीत्किल कतिपयेभ्यो दिवसेभ्यो भीरोरिव प्रकृतिः श्रीमतो रमेशस्य। नासीत्किल पुरास्य पिशाचसत्तायां विश्वासः। किन्तु भूयो भूयोऽनुभूयमानैराश्चर्यैः सन्दिग्धमिवासीदिदानीं हृदयमेतस्य। अथ यावद्द्वारदेशमनुप्राप्तः प्रसारयति पाणिं कवाटमुद्घाटयितुं तावदेव तु पश्चादुपेत्य गृहीतः सन्निधाय केनापि सोऽयं पाणिरेतस्य आदित एव साशङ्कं हृदयं तत्र च करे कोमलतरस्य कस्यापि करतलस्य स्पर्श इति नूनं महत्येवेयमिदानीमनर्थपरम्परा श्रीमति रमेशचन्द्रमहोदये समापतिता। वाचामगोचरं किलेदानींतनं पर्याकुलत्वमेतस्य। यावत्पुनः समाक्रान्तो भीत्याऽयमाक्रोष्टुं प्रवर्तते तावदेव यया गृहीतः पाणिः श्रीमतो रमेशमहाभागस्य सेयं युवतिः सकरुणं प्राह।

आर्यपुत्र—कश्चिन्नाद्याप्यभिज्ञानम् । अपि नाम विस्मृतोऽयं जन आर्येणेति ।

द्वादशः किलायं वत्सरोऽदर्शनमुपागतायाः श्रीमत्याः सरलायाः । तथापि न खलु नाभिज्ञातः स्वरसंयोगोऽयमेतस्याः श्रीमता रमेशेन । कुतो हि नाम प्रत्यभिज्ञाप्रलोपस्तत्तादृशस्य प्रेम्णः । समागते च श्रवण-सरणिं तन्त्रीस्वनविडम्बिनि श्रीमत्याः सरलायाः स्वरसंयोगे स्तिमित इव विस्मयेनावोचच्छ्रीमान् रमेशमहाभागः—"कथं भवती"ति ?

सरला—आर्यपुत्र ! अथ किम् ?

रमेश—( सानन्दमन्थरम् ) धिक् प्रेयसि ! कुत्र तावदतिवाहितः कल्पायमानोऽयमेतावान्समयः श्रीमत्या कथञ्चानिवेद्यवास्मानसि प्रयात-वती । कथञ्च नासीत्समय एतावत्यपि सकृदपि तावदस्मानवेक्षितुं ते मनस्यभिलाषः !

सरला—( रमेशस्य करौ कराभ्यां गृहीत्वा ) क्षम्यतां नाथ ! अस्ति मे सम्भावना यदि श्रोष्यत्यामूलान्तमेव मे वृत्तं तदा नांशतोऽपि दास्यति कोपाय करावलम्बमार्यपुत्र इति ।

रमेश—प्रेयसि, कुतो नाम त्वयि मे कोपवार्तापि । किमु नास्मि परिचितस्ते विशुद्धतमस्य चारित्र्यस्य येन कोपभाजनं श्रीमतीमाकल-यिष्यामि । यद्यप्यनापृच्छ्यैवास्मान् व्यधायि प्रयाणं श्रीमत्या यद्यपि विनिपात्य निरन्तरसमुच्छलत्कल्लोलभीषणे विप्रयोगसागरे जनमेनमन्त-र्हिता समभूः यद्यपि च परित्यक्तमस्मदीयशय्यायां मासजातमपत्यं तथापि नास्पृशन्मे हृदयं रोषलेशोऽपि गरीयान्हि मे विश्वासः सुनिर्म-लतमे श्रीमत्याश्चारित्र्ये । श्रीमत्या पुनरिदानीं स्वयमेव समुपस्थाय समुज्ज्वलीकृतञ्च विभूषितञ्चैतदात्मीयं सदनम् । तत्को हि नाम सम्प्रति कोपस्यावसरः ।

सरला—इत्थमेव मे मनसो विश्वासः । स एव च प्रत्यागमयदिमां वो दासीम् ।

रमेश—प्रेयसि, प्रदीपं तावत्प्रज्वालयितुमिच्छामि ।

सरला—अनुचितं खल्वेतत्, सन्निहिता नन्विदानीमेषा परि-चारिका । अस्या एव चाधिकारः कर्मण्येतस्मिन् । सन्तिष्ठतु तावदार्य-पुत्रो यावत्स्वयमेव प्रज्वाल्य प्रदीपं साक्षात्कुर्वती सुचिरमुपोषितयोरनयो-र्विलोचनयोः पारणां निर्वर्तयिष्यामि ।

प्रियपाठकमहाभागाः—इत्येवमभिधाय च श्रीमतां परिचितपूर्वया तापस्या साम्प्रतिक्या सरलया समादायार्चिःशलाकां प्रज्ज्वालितो दीपः। प्रादुर्भूते च प्रदीपे यावद्विकिरति पुरस्तात्प्रमदभरजडीकृतां दृशं श्रीमान् रमेशमहाभागस्तावदासीदस्य नयनगोचरस्तापसीवेषसमाच्छन्ना सरला यत्सत्यमपरेव देवतेयमिदानीमालक्ष्यत। व्रीडावनतवदना चेयं पुरस्तात् श्रीमतो रमेशभागस्यातिष्ठत्। यदि तावद्वेषमस्या इदानींतनं यः कोऽपि साक्षादकरिष्यत्तदा नूनमवश्यं प्रादुरभविष्यन्मनस्येतस्य सरलायामादरातिशयः। श्रीमान् रमेशमहाशयोऽपि समवेक्ष्यैनां विस्मयस्तिमित एवादितः समभूत्। परस्तात्तु समुच्छलत्प्रणयरसेन चेतसा सरभसं गाढं परिष्वज्य मुहुर्मुहुरचुम्बन्नातिमांसलमनोरमौ दरविकसितपाटलकुसुमप्रभौ कपोलावस्याः। व्यपगतः खल्विदानीं तुषारशिशिरेणास्याः शरीरस्पर्शेन सर्वाङ्गीणस्तापः श्रीमतो रमेशमहाभागस्य। परस्तात्पुनर्यदनयोः संवृत्तं तदेतदाचष्टे महाकवेः श्रीमतो भवभूतेरिदं पद्यम्।

किमपि किमपि मन्दं मन्दमासक्तियोगा-
दविरलितकपोलं जल्पतोरक्रमेण।
शिथिलपरिरम्भ व्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेव व्यरंसीत्॥

अन्ततः पुनरभ्यधात्सरला "यद्यनुमन्यत आर्यपुत्रेण तदा वाञ्छामि विनिवेदयितुमशेषमपि वृत्तमात्मीयम्। येन किमिति चानिवेद्यैव प्रयाता न्यषातयं कालमेतावन्तं दुस्तरतरे विरहाम्बुधावात्मानमितीदं विशदीस्यादिति।

रमेश—अवहितोऽस्मि किन्त्वार्ये! बहु खल्वस्ति ममेदानीं जिज्ञास्यम्। तथापि किंवा प्रथमतः किञ्च परस्तात्प्रष्टव्यमिति न किल किमपि मे चेतसि परिस्फुरति। तदिदानीं स्वयमेव तावन्निवेदयतु श्रीमती यथाभिलषितक्रममात्मनो वृत्तम्।

इत्थमनुमोदिता श्रीमता रमेशमहाभागेनोपक्रान्तवती वृत्तमात्मीयमाख्यातुं श्रीमती सरला।

आर्य, यदा किल जातमात्रमेव दिवंगतमपत्यमस्माकं ततःप्रभृति सन्तानार्थिना समवलम्बिताः किल नानाविधा अभ्युपायाः। भवता सेविताश्च यथादेशं मयानैकविधा ओषधयः। किन्तु नासीद्विना नैराश्यं किमपि फलमभ्युपायानामेतेषाम्। अथ समुपदिष्टः किल गुरुभिरार्यपुत्रः पुनः परिणेतुम्। अनुमतश्च मयाऽप्ययं गुरुजनानामुपदेशः। प्रयतितश्चा-

नेकशः समावर्जयितुमन्तरङ्गमार्यपुत्रस्य । तथापि यदा नान्वमोदिष्टार्थमिमं श्रीमाँस्तदा तु समधिकमेव व्याकुलीबभूव मे हृदयम्। अथ कदाचित्पश्चिमेन मन्दिरं वृक्षवाटिकायां विचरन्ती यदृच्छयोपगतां कामपि योगिनीमद्राक्षम्। सन्दर्शनमात्रपरिचितयाऽपि सञ्जनितप्रीत्या स्नेहैकरसया तया संलपन्ती तत्तदशेषमपि व्यवृणवं पुरस्तादस्या वृत्तमात्मीयम्। नापि नावत्रमन्यपत्यताव्यसनम् । सा तु तत्समाकर्ण्य सावधारणमिव समाश्वासयन्ती प्रत्याह—भद्रे, अस्ति किल मत्सविधे मूलं किमपि, यस्मिन्नासेविते सञ्जायते चापत्यं जीवति च सुदीर्घं समयं यदि नैतदनुपालयिष्यति जनन्येतस्य। तथा हि परिपाल्यमानमिदं वियुज्यते प्राणैरिति। अथ 'किंवाऽत्र मयाऽनुष्ठेय'मिति मयानुयुक्ता च प्रत्यवदत्सेयं भद्रे, सेव्यतां मया प्रदीयमानमिदं मूलं, तेन चावश्यं सञ्जनिष्यते ते गर्भः। अथ यदा व्यतीतेषु नवसु मासेषु समनुभूयेरन् प्रसववेदनास्तदा समाह्वयतां श्रीमत्या सखीयमात्मीया। अस्याः पुनरयमेव ग्रामो निवास इत्यवबुध्यतां श्रीमत्या अवसरे च तस्मिन्नुपस्थिताऽहं कथमप्यपवाह्य तत्तवापत्यं यथोचितमनुपालयिष्यामि । अतिक्रान्ते शैशवे चैतन्नेष्यसि सदनमात्मीयम्। ततो हि नास्ति निधनभीतिरेतस्येति।

अथाहं स्वीकृत्य तस्याः सकाशान्मूलिकां यथोपदेशमासेवेषि । अचिरादेवाहमन्तर्वत्नीत्वमापन्ना । ततः प्रभृति प्रत्यहमेवासीदस्याः साक्षात्कारः। अथ यदा प्रत्यासन्नः प्रसूतेः समयः तदा निराकृत्य सार्वदिकीं साविकामपरामेव सन्यधापयमिति मन्ये स्मरत्येवैतदार्यपुत्र इति। सैवेयं योगिनी। एष च जातमात्रं कुमारकं पञ्चत्वमापन्न इति व्यपदिश्य समादाय प्रतिजगामेति विदितमेवेदमार्यपुत्रस्य।

रमेश—आम् स्मर्यते खल्वेतत्।

सरला—ततः परं पुनर्व्यपगतेष्वपि पञ्चसु वर्षेषु न किल सकृदपि मे योगिन्याः समागमः संघटितः तेन च गृहीतं मे मनो बलीयसा नैराश्येन । कुतश्चावसरेऽस्मिन्नेतावान्मे प्रागल्भ्यं येन संघटितपूर्वं वृत्तमेतदाख्यातुं प्रभवेयम्। तत एव च नास्मि श्रीमतः सविधे किमप्याख्यातवती। केवलं तु गुरुतरया चिन्तया कवलीक्रियमाणेन चेतसा समवास्थिषि । अथैकदाऽवितर्कितोपगतां महाभागामिमामद्राक्षम् । अप्राक्षञ्च सोत्कण्ठामेनां कुशलं कुमारस्य। असौ तु कृतं चिन्तया, कुशली किलेदानीं ते तनयः। यदि च समनुष्ठास्यति मयोपदिश्यमानं विधिं भवती तदैनमवश्यं प्रदर्शयिष्यामीति प्रत्याह। अथ कस्तावन्म-

हाभागायाः समादेश इत्यनुयुक्ता सा पुनरप्यसावभाषिष्ट । सखि, नाधिकं किमपि । इदमेव केवलं विधीयतामद्य किल प्रौढप्रायायां तमस्विन्यां सह मया समागच्छतु भवती । समादाय च मया वितीर्णां कामपि मासजातां स्तनंधयीं तनयां तूष्णीमेव प्रतिनिवृत्ता प्रविश्य-मन्दिरमात्मीयं विनिधाय चैनामात्मनः पत्युः शयनीये पुनरपि मे समीपं समागच्छ । आत्मजा किलेयं मदीयैव । श्रीमत्याः पुनः कुमारमनु-पालयन्ती नाहमिदानीमेनां प्रपोषयितुं प्रभवामि । बलवद्धि मे दारि-द्र्यम् । अवश्यं पुनः परिपालयिष्यति दयितस्ते कुमारिकामेनामिति ।

रमेश—ततस्ततः ।

सरला—स्वीकृते च मयाऽस्मिन्नर्थे पुनरप्यसौ प्राह सखि सुष्ठु सावहितश्च यत्परिपाल्यते मया ते तनयः । तत्र केन पुनः कर्मणा मे प्रत्युपकरिष्यति भवती । एतदाकर्णयन्त्येव त्वहं झगिति प्रत्यवदम् यदा-देक्ष्यति महाभागेति । सा न किञ्चिदप्यधिकं यदि किल प्रतिश्रूयते श्रीमत्या कुमारकेणात्मनस्तनयाया ममोद्वाहो यदि चायमर्थो नाऽति-प्रकाशतां नीयेत तदाऽवश्यं साक्षात्करिष्यामि ते तनयम् । अहं तु बलवदेव गृहीता दारकावलोकनकुतूहलपिशाचिकया तदात्व एव शिर-स्यकार्षमादेशमेतस्याः । अस्मिन्नेव च वासरे निशीथे समुपेत्य प्रती-क्षमाणाया मे सविधं योगिन्यसौ समवलम्बितशिशुविग्रहामिव सुकु-मारतरां कन्यकां आत्मनः प्रायच्छत् । निधाय चैनां पयोधिफेनपाण्डुरे हंसतूलविनिर्मित आर्यस्य शयनीये झगित्येवास्मि अपक्रान्तवती ।

रमेश—( ततस्ततः ) ततश्च योगिनीमनुप्रस्थिता सह तया कुटीरं किमपि नातिदूरवर्ति प्राविक्षम् । अद्राक्षं चात्र केनापि महात्मनोपला-ल्यमानमङ्कगतं बालम् । अथ योगिनी समादाय नयनविलोभनीयं कुमारकमेनं नातिदूरोपविष्टायाः कृतयथोचिताचारायाश्च न्यवेशयन्म-मोत्सङ्गे । तेन च नवोदितेनेव निष्कलङ्कमधुरेण राकाचन्द्रमसा च तदात्व एवोद्वेलतामापेदे मदीयः प्रमोदाम्भोधिः । प्रस्नुतस्तनी च मुहुर्मुहुः मूर्धानमस्योपजिघ्रम् । मुहुर्मुहुश्च क्रोडेऽकार्षम् । मुहुर्मुहुश्च पर्यचुम्बं नवनीतमृदुलौ कपोलावेतस्य । मुहुर्मुहुश्च परिस्फूर्जता वात्सल्येन प्रमोदपरिवाहिना च चक्षुषैनमवेक्षमाणाया नासीन्मे मनसस्तृप्तेरन्तो नाम । प्रतीतश्च नूनं मदीय एवात्मज इति ।

रमेश—( सोत्कण्ठातिशयम् ) प्रेयसि, कुत्र तावदिदानीं हृदया-ह्लादको वत्सः ।

सरला—आर्यपुत्र, धीरस्तावद्भव। अशेषमप्येतदाख्यास्यामि। ततः किल महात्मायमवादीत् न खलु शक्यते चिरायात्रावस्थातुमस्माभिर्विदिता हि वयमिदानीं रक्षापुरुषाणामिति। अथास्मि योगिन्या समादिष्टा—भगिनि गम्यतामिदानीमात्मनः सदनम्। अहं किल यथोचितमात्मजं ते पालमिष्यामि। तदलं चिन्तया। परिपाल्यतां पुनस्त्वया मे तनया। सम्प्राप्ते पुनरवसरे स्वयमेवाहमादाय कुमारकमन्तिकं ते समागमिष्यामि। एतत्पुनर्नाशतोऽपि विस्मर्यतां तत्कथमप्यप्रत्याख्येयमेवानयोः कुमारीकुमारयोर्विषये विज्ञापनं मदीयमिति। इत्थमुभाभ्यामप्येताभ्यामनुज्ञातगमनाया अपि न व्यमुञ्चन्ममोत्सङ्गं वत्सः। विलोभ्यापि समादीयमानोऽयमेताभ्यां झगिति परावृत्तवदनो मामेव पर्यष्वजत्कराभ्यां गाढम्। योगिन्या त्वाहूयमानो वसनाञ्चलमस्याः पाणिनैकेन सस्मितं धृतवान्। नैव पुनर्मां पर्यत्याक्षीत्। मन्ये द्विधैव भूतमिदानीमतरङ्गमेतस्य। अनेन चास्य हृदयापहारिणा समाचरितेन विमोहमापन्ना मन्त्रौषधिवशीकृतेव भुजगी योगिनीमेव सहपुत्रकेणान्वागमम्। अनेकशश्च निवर्त्यमानाऽप्यनया नैव प्रतिन्यवृत्तम्। एवमेकादशद्वादश वा वत्सराणि सह तया तेषु तेषु तीर्थेषु परिभ्रमन्ती सम्प्रति नगरमेतदुपागच्छम्। अत्र चोपस्थिताया अतीतप्रायो मे मासः। आसीच्च मे मनसि साक्षात्करणीय इदानीं पुनरार्यपुत्र इति। महापराधजनिता पुनर्भीतिर्भूयो भूयो न्यवारयन्मां कर्मण एतस्मात्। अविगणय्य चैनां कदाचिन्निशि निगूढमेव सदनमेतत्प्राविक्षम्। समुपलक्ष्य तु प्रबुद्धमार्यपुत्रं गृहीतेन साध्वसेन झगित्येव प्रत्यपाक्रामम्।

रमेश—भवतु यद्भूतम्। किन्तु प्रेयसि! कुत्र तावदिदानीं बहिश्चरं मदीयमुच्छ्वसितं वत्सः।

समाकर्ण्येदमुत्कण्ठातिशयगृहीतहृदयस्य वचनं श्रीमतो रमेशमहाभागस्य गर्भागारबहिःशालायां समवतिष्ठमानमाह्वयत्कुमारकं श्रीमती सरला। वत्स सुधाकर, इतस्तावदिति। एष पुनर्मातुराज्ञावशाद्गर्भागारस्य बहिः कक्षायामुपविष्टः समभूत्। आहूतश्चानया शनैः शनैर्वासगृहं प्राविक्षत्। कालातिपातासहिष्णुः पुनः श्रीमान् रमेशमहाभागः प्रमोदभरतरलितेन परिस्पन्दमानवात्सल्येन च चेतसा स्वयमेवैनमुपसृत्य सुनिर्दयं समालिङ्गत्। स्वयमेव तावद्विभाव्यतां प्रणयरसार्द्रेन चेतसाऽयमिदानींतनः संमोदो रमेशमहोदयस्य प्रियपाठकमहाभागैः।

अथ प्रभातायां तमस्विन्यां भूतलमुपगतयैव कयापि तन यानुगतया

देवतया श्रीमत्या सरलया सनाथीकृतं भवनमवेक्षमाणाः श्रीमतो रमेश-महाशयस्य सदनवर्तिनो जना अमन्दमेवानन्दमन्वविन्दन्त। यादृशश्चेदानीं सुधाकरश्च तापसीश्चात्मनो भवने विलोकमानायाः कुमार्या लावण्यमय्या आनन्दः सोऽयं स्वयमेवानुमीयतां रसिकैः।

अथ यदा निवेदितः सरलया लावण्यमयीसुधाकरयोरुद्यानवृत्तान्त-स्तदा प्रत्यङ्गमिव प्रास्फुरत्प्रमोदातिशयः श्रीमतो रमेशमहाभागस्य। ततः प्रभृति पुनस्तथा समाक्रान्तौ लज्जया च विनयेन च लावण्यमयीसुधाकरौ यथैतौ प्रकाशतो नैव परस्परं किमप्यालपितुं प्राभूताम्।

इति लावण्यमय्यामष्टमः परिच्छेदः

## नवमः परिच्छेदः

# परिणयकौतुकम्

अथ व्यतिगतेषु केषुचिद्दिवसेषु सुनिश्चितः श्रीमता रमेशचन्द्रमहोदयेन लावण्यमयीसुधाकरयोरुद्वाहः। न खलु साक्षाद्विदितमेतेन कुलं योगिन्याः। किन्तु कुतो महात्मनामेवं विधानां दुष्कुलेषु प्रभवः। न हि लवणाकरेषु चामीकरस्य निष्पत्तिः संदृष्टा। इत्येवमाकलयन्सम्भाव्यैव समुन्नतकुलोद्भतत्वं श्रीमत्या योगिन्याः प्रसन्नतमेन चान्तरङ्गेण प्रोत्साहित आत्मजामस्या लावण्यमयीं तनयेनात्मनो विवाहयितुमैहिष्ट।

उपालभन्त खल्वाचरितेनामुना रमेशमहोदय पुरोभागिनः केऽपि। न पुनरुपालम्भमेनं गणयाञ्चकार श्रीमान् रमेशमहाभागः। अयुक्तः किल कर्मणामेवंविधानां कालातिपात इति च मन्यमानो निर्णीय विद्वत्तमैर्ज्यौतिषिकैर्विवाहदिनं निमन्त्रणपत्रिकाः प्राहैषीत्।

अथ शनैः शनैः समुपतिष्ठद्भिर्निचितमिव निरन्तरं प्राघुणिकैः सदनं श्रीमतो रमेशस्य। समाहितनानाविधसंस्कार चैतदपरमिव दिव्य-मन्दिरं महोत्सवमयमिव मानवमयमिव ध्वनिमयमिव संमदसंरभ-मयमिव च व्यभासिष्ट।

संकल्पितश्चात्र महोत्सवे महीयसो धनराशे उत्सर्गो निसर्गोदारेण श्रीमतो रमेशमहाभागेन। सज्जीकृता अशेषा साहित्यसम्भाराः। वितीर्णश्च सुसज्जितचारुतरोपवनवलयितः सौध आत्मीयो वधूपक्षीयाणां

निवासाय श्रीमता रमेशेन। तेषामपि व्ययः स्वयमेव निर्वाह्य इत्यासीन्मनसि श्रीमतो रमेशस्य। योगिनी पुनर्नानुमन्यतामुष्यैवंविधामभ्यर्थनाम्। यावच्छक्यं स्वयमेवाहमात्मनो व्ययं निर्वाहयिष्यामि इति च सनिर्बन्धमेवैषा प्रावोचत्। तत एव च शिथिलीचकाराभिनिवेशमात्मीयं श्रीमान् रमेशमहाभागः। इत्थमेतदशेषमपि संघटितप्रायम्। किन्तु कः पुनरत्र कन्यायाः प्रदातेति न किल केनापि विज्ञातम्। न चापि तत्र तदानीं तथाविधः कोऽपि संदृष्टो यस्य नाम कर्मण्यत्राधिकारः स्यात्। न चाप्येतद्विषये कोऽपि योगिनीमनुयोक्तुं प्रागल्भत।

अवसरेऽस्मिन्सर्वत एवाप्रकाशं व्याहरँल्लोकाः जघन्यजातीया किल योगिनी। एतस्याश्च तनयायाः कुमारेणात्मनः पाणिं ग्राहयता न किल साम्प्रतमनुष्ठितं रमेशमहाभागेन। एतेन हि समुन्मूलितमिव गौरवमात्मनः कुलस्य जातेश्चेति। नैव पुनर्व्यापारितं जनवादेऽस्मिन्मनः श्रीमतारमेशेन।

अथ समुपस्थिते विवाहदिने श्रीमान् रमेशमहोदयो यथा संकल्पितं महीयसा विभवेनात्मनस्तनयस्योद्वाहमङ्गलं निवर्तयामास। अवसरेऽस्मिन्ध्वनिमयमिवाभवन्मङ्गलवादित्रनिर्घोषैरशेषं नगरम्। आसीच्च महीयान्संमर्दः। कन्याप्रदानावसरे पुनः सह योगिन्या कोऽपि नातिधवलायतश्मश्रुः समुल्लसता कनकपिङ्गलेनाप्यन्तराऽन्तरा मृणालतन्तुधवलेन जटाकलापेन समुद्भासितशीर्षः प्रसन्नगम्भीराकृतिः कोऽपि पीठमारूढः कन्याप्रदानविधिं विधातुमारेभे। तस्मिंश्च व्यापारितविलोचनो रमेशमहोदयः सपदि विस्मयस्तिमितः समभूत्। पुलकितानि चादसीयानि गात्राणि। नियन्त्रितेव चासीदिदानीं वागेतस्य। प्रादुरभूच्च सर्वाङ्गीणः कम्पः। अथ यथाकथमपि विनिवृत्ते प्रदानविधौ सदनं प्रविष्टः श्रीमान् रमेशमहोदयः समाहूय भार्यामप्राक्षीत्।

रमेश—प्रेयसि, अपि नाम जानासि कस्य वा तनया लावण्यमयीति?

सरला—अथ किं सा किल योगिन्या दुहिता।

रमेश—कच्चिदाख्यातवती विशेषतः कमपि वृत्तान्तं योगिनी श्रीमत्याः?

सरला—न खलु कञ्चिदपि। एतावत्तु प्राह निर्वृत्ते परिणये विशेषतो वक्ष्यामीति।

रमेश—कच्चिन्निपुणमवेक्षितः श्रीमत्याः प्रदाता कन्यायाः?

सरला—किमत्र निपुणं द्रष्टव्यम्। स किल महात्मा योगीन्द्रः अयमेव श्रीमत्या लावण्यमय्याः पितृदेवः। एष एव च योगिन्या साकं परिभ्रमति।

रमेश—( सानन्दगद्गदम् ) यत्सत्यं धुरि किलेदानीं भाग्यवतां वर्तामहे। येनाऽयं महात्मा नः सम्बन्धी संवृत्तः। प्रेयसि, यः किल नरपतिरस्मदीयस्य ग्रामस्य स एव नन्वयं भूसम्पत्तिमान् श्रीयुतः शशिशेखर-महाभागः।

सरला—( सविस्मयम् ) कथं नरपतिः शशिशेखरोऽयं महाभागः ?

रमेश—कोऽत्र सन्देहः। सुनिपुणं किल मया निरूप्यायमभिज्ञातः। अहो ! अनुग्राह्याः किल वयं दैवस्य। येनेदानीं नृपात्मजा नो वधूः संवृत्ता।

सरला—प्रभवति सर्वथा मनोरथो धातुः।

रमेशः—अनुयुज्यतां तावदत्रार्थे समधिगत्यावसरं निगूढमेव योगिनी श्रीमत्या।

सरला—यदादिशत्यार्यः।

अथोपगता योगिनीं स्वभावसरला श्रीमती सरला समधिगत्यावसरं दयितसमादिष्टमर्थमप्राक्षीत्। आकर्ण्य चानुयोगमेतस्या न्यवीविदद्यथावशेषमप्यात्मनो वृत्तं योगिनी। यदा किल प्रादुरभूद्राज्ञि प्रत्यवस्थायिनां गरीयान्प्रक्षोभस्तदा भूयाँस एवामीभिः प्राणैर्वियोजिता अस्मदीयराष्ट्रे रक्षापुरुषाः। संभाविताश्चात्र दुर्दैववशादपराधीति नरपालः सार्वभौमेन। ततः प्रभृति च योगीन्द्रवेषप्रच्छन्नः सह सहधर्मिण्या देशाद्देशान्तरं परिभ्रमति। अन्यत्पुनर्विदितमेव नश्चरितं श्रीमत्याः। भद्रे, बहिश्चरमुच्छ्वसितं किल मदीयं भवतीत्यतएव श्राविता रहस्यमिदम्। तत्तथा खल्ववधीयतां यथा नायमर्थः प्रकाशतां विन्देत।

सरला—तन्महाराज्ञी चन्द्रप्रभा खलु भवती।

योगिनी—अथ किम् ?

सरला—( सहर्षगद्गदं पादयोः प्रणिपत्य ) क्षम्यतां महाभागे अजानत्या किल मयासि भूयिष्ठमायासिता। नूनं प्रसन्न इदानीं मे भगवान् येनायमेवंविधः स्पृहणीयतमः सम्बन्ध आवयोः संघटितः।

योगिनी तु सरभसमुत्थाप्यैनां गाढं परिषस्वजे। यत्सत्यमगोचरः किलायं वाचां तदानींतनस्तयोः प्रमोदव्यापारः। स्वयमेव तावदयं स्नेहरसपेशलेन मनसा विभाव्यतां सहृदयप्रवरैः।

निवेदितमप्येतद्योगिन्या वृत्तमात्मीयं नासीद्विहाय केवल श्रीरमेश-महाभागं कस्यापि श्रवणयोर्विषयः। ततः पुनः सावशेषमेव महोत्सवेन च वैभवेन च निर्वृत्तो विवाहविधिः शनैः शनैश्च प्रशान्तो महोत्सवसमारम्भो विसर्जिताश्च यथोचितं सम्भाव्य यथाग ' सम्बन्धिनश्च प्राघुणिकाश्च

श्रीमता रमेशमहाभागेन । न किल केनापि महोत्सवेऽस्मिन्भूपतया गृहीतो योगीन्द्रो नापि वा महाराज्ञीति सम्भाविता योगिनी । प्रियपाठकाः, निरवधिः किलेदानीं समुज्जृम्भितः प्रमोदपूरः श्रीमतोर्लावण्यमयीसुधाकरयोः । प्लाविताविवेदानीं निरर्गलं समुच्छलता प्रणयरसेनैतौ निरतिशय सुखं निरविशताम् ।

इति लावण्यमय्यां नवमः परिच्छेदः

## उपसंहारः

अथ व्यपगतेषु कतिपयेषु दिवसेषु समवगत्य निरपराधितां प्रशंसित आघोषणपत्रिकया महाराजः शशिशेखरः श्रीमता सार्वभौमेन । प्रतिपादिता च पूर्वमात्मसात्कृता निखिलापि भूसम्पदेतस्य । अवबुध्य चैतत्प्रत्यागतावुपरागविमुक्तसुधाकरविनिर्मलौ श्रीमन्तौ चन्द्रप्रभाशशिशेखरौ नगरमात्मीयम् । ज्यौतिषिकसमादिष्टे च शोभने मुहूर्ते समहोत्सवं मन्दिरमात्मनः प्राविशताम् । तदनु च कियन्तं कालमनुभूय महाराजपदसौख्यं प्रत्यासन्ने वार्धके विना सुकृतातिशयं सुदुर्लभतरं वाराणसीवासमरोचयताम् । प्रतिष्ठमानाभ्यां च त्रिभुवनपावनसलिलया श्रीमत्या सुरसरिता समुद्भासितां विश्वनाथपदपवित्रितां श्रीमतीं वाराणसीं भूयिष्ठ एवात्मनो विभव एकमात्रायै दुहित्रे श्रीमत्यै लावण्यमय्यै प्रादायि। निरमायि च वाराणस्यां विशालतममपरमिव हिमशैलशिखरं श्रीशिवायतनं किमप्येताभ्याम् । तत्रैव च क्षपयितुमुपक्रान्त आयुषः शेषः ।

इतश्च श्रीमान् रमेशमहोदयोऽपि विचिन्त्य सांसारिकभारोद्वहनक्षमं तनयं सफलीकर्तुकामो जीवितमात्मीयमनुगतः श्रीमत्या सरलया वैराग्यमापन्नोऽविमुक्तपुरीं प्रायासीत् । नियुक्तवाँश्चात्मनः पदे प्रौढप्रायं श्रीमन्तं सुधाकरमहाभागम् । सुधाकरोऽपि श्वशुरस्य पितुश्च सम्पदं समासाद्य सुव्यवस्थमेवैनामासेवमानः सर्वोत्तरलावण्यसमुल्लसितया सदानुगतया सहधर्मिण्या श्रीमत्या लावण्मयमय्या समं ताँस्तान् भोगानुपभुञ्जानः सम्पादयँश्च लोकोत्तरैः कर्मभिः दिगन्तसञ्चारिणीं कीर्तिं सुखमुवास । येषाञ्च प्रागासील्लावण्यमय्या आभिजात्ये सन्देहस्तेऽपि विदितपरमार्थाः पर प्रमोदमासादयामासुः अन्तराऽन्तरा च सह भार्यया समुपसृत्य श्वश्रूश्वशुरौ च मातापितरौ च संभावयामास । गृहीताशीश्च तदुपदिष्टमध्वानमनुशीलयामास । सम्भावितश्चायं नानाविधोपाधिप्रदानादिभिः सदाचरितप्रसन्नेन श्रीमता सार्वभौमेन ।

आसँश्चास्य श्रीमत्यां लावण्यमय्यां त्रिचतुराण्यनुरूपाण्यपत्यानि । एवं समुपचिता च सर्वतः श्रीः सुधाकरमहाभागस्येति शिवम् ।

समाप्ता